# औदुम्बरी

।। अभिनवगलज्जलिकासङ्कलना ।।

रचनाकारः
महामहोपाध्यायस्त्रिवेणीकविः
मिश्रोऽभिराजराजेन्द्रः
कुलपतिचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयः
वाराणसी-(उ०प्र०)



वैजयन्त प्रकाशन
इलाहाबाद

# औदुम्बरी

।। अभिनवगलज्जलिकासङ्कलना।।

गालज्जलिकः
मिश्रोऽभिराजराजेन्द्रः
पूर्वकुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयः

ISBN 978-93-80632-08-7

| | | |
|---|---|---|
| प्रथमसंस्करणम् | : | महाशिवरात्रिः १७ फरवरी 2015 ई० |
| स्वत्वाधिकारः © | : | रचनाकारः |
| ग्रन्थमूल्यम् | : | पञ्चशतरूप्यकाणि |

प्रकाशकः
वैजयन्तप्रकाशनम्
8, बाघम्बरीमार्गः, भरद्वाजपुरम्
( अल्लापुरम् ), इलाहाबादम्-( उ०प्र० )

मुद्रकः
दूबे प्रिन्टर्स एण्ड ग्राफिक्स
50 A, बलरामपुर हाउसः
इलाहाबादम्-( उ०प्र० )

# AUDUMBARI

(A Fresh Collection of Sanskṛta Gazals)

By
Trivenikavi
Prof. Abhirāja Rajendra Mishra
Ex Vice Chancellor
Sampurnānanda Sanskṛta University
Varanasi-(U.P.)



Vaijayanta Prakashana
Allahabad

Audumbari
A Fresh Collection of Sanskṛta Gazals

**The Poet :**
**Mahāmahopādhyāya**
**Trivenikavi**
**Prof. Abhirāja Rajendra Mishra**
**Ex Vice Chancellor**
**Sampurnānanda Sanskṛta University**
**Varanasi-(U.P.) INDIA**

**ISBN 978-93-80632-08-7**

**First Edition : Mahāshivarātri 17th February 2015**

**Price of the Book : Rs. Five Hundred Only**

**Publisher :**
**Vaijayanta Prakāshan**
**8, Baghambari Road, Bharadwajapuram**
**(Allahpuram) Allahabad- (U.P.)**

**Printed at :**
**Dube Printers & Graphics**
**50 A, Balrampur House**
**Allahabad- (U.P.)**

# इयत्तया अनवधारणीया-संस्कृत ग़ज़ल

समकालीन संस्कृत साहित्य विषय-वैविध्य तथा विधा बाहुल्य का मणिकाञ्चन संयोग है। यद्यपि बाज़ारवाद तथा आर्थिक क्रान्ति के इस युग में कविता पर बहुत बड़ा प्रश्नचिह्न लगाया जा रहा है कि अब कविता कौन-सा प्रयोजन पूरा करती है? आचार्य राजेन्द्र मिश्र भी इस मनोवेदना को प्रकट करते हैं-

**ध्रुवं निष्फलं मत्कवित्वं नु जातम्।**
**ममैवानुजा नेच्छवो मामुपैतुम्।।**[१]

हमारी भावी पीढ़ी ही यदि काव्य-परम्परा का अनुसरण नहीं करना चाहती है तो कवित्व अथवा कविता व्यर्थ है। परन्तु इस निराशा पर कवि के स्वाभिमान ने विजय-पताका फहराते हुए कहा-मेरी गीतियाँ किसी प्राकृतकवि का अवसरानुकूल गीत नहीं हैं अपितु ये तो पवित्र मन्त्र के समान प्रभावी गीतियाँ हैं-

**अङ्ग गीतिस्त्रिवेणीकवेः श्रूयताम्।**
**प्राकृतेयं न भोः पूतमन्त्रात्मिका।।**[२]

पूतमन्त्रात्मिका ग़ज़लों की सुदीर्घ सर्जना से आचार्य राजेन्द्र जी ने समकालीन संस्कृत साहित्य को समृद्ध किया है। कवि संस्कृत की सुदीर्घ काव्यसर्जना-परम्परा में सिद्धहस्त है-**कुले भवभूतिपण्डितराजयोर्जातो-ऽभिराजोऽहम्।**[३]

जिसका भवभूति तथा पण्डितराज जगन्नाथ के कुल में जन्म हुआ हो वह उनकी परम्परा का उत्तरोत्तर नवनवोन्मेष करने का आकांक्षी है। एक ओर तो आचार्य राजेन्द्र मिश्र का काव्य-संसार नवनवोन्मेषपूर्वक नूतन विधाओं के माध्यम से वर्तमान युगबोध को प्रस्तुत करता हुआ संस्कृत भाषा के मृतभाषारूप मृषापवाद को निरस्त करता है तो दूसरी ओर मत्तवारणी, शालभञ्जिका, हविर्धानी, कनीनिका तथा शिखरिणी इन पाँच ग़ज़ल-संग्रहों के पश्चात् **औदुम्बरी** की सर्जना से यह प्रतिपादित करता है कि वर्तमान की विकटता तथा भीषणता को संस्कृत कविता का माधुर्य कैसे छिन्न-भिन्न कर देता है। ग़ज़ल-विधा का संविधानिक (Format) तो अरबी तथा उर्दू से आयातित है, परन्तु संस्कृत की कवि-परम्परा ने विषय-वस्तु की दृष्टि से इस विधा को नूतन आयाम दिये हैं।

संस्कृत-साहित्य में ग़ज़ल के प्रवर्तक के रूप में भट्ट मथुरानाथ शास्त्री का नाम अग्रगण्य है। उनके पश्चात् पण्डित बच्चूलाल अवस्थी, आचार्य जगन्नाथ पाठक, आचार्य राजेन्द्र मिश्र, आचार्य राधावल्लभ त्रिपाठी आदि की कवि-परम्परा ने संस्कृत ग़ज़ल को सुप्रतिष्ठित कर यह सिद्ध कर दिया कि ग़ज़ल-विधा पर मात्र

किसी भाषा–विशेष का एकाधिकार नहीं है अपितु यह एक ऐसा शिल्प है जो भावात्मक सम्वेदनाओं को अर्थगौरव प्रदान करता है। संस्कृत कवियों ने ग़ज़ल की विषय–वस्तु में क्रान्तिकारी परिवर्तन किये। उनकी ग़ज़लों में प्रेम–गीतियाँ भी हैं तथा जीवन के यथार्थ का रङ्ग भी है। संस्कृत ग़ज़ल पाठक को ऐसे लोक के आलोक से आलोकित करती है जहाँ अभाव में भाव उत्पन्न होता है और वेदना में संवेदना पल्लवित होती है।

**कविः पदबन्धतूलिकया यदाऽऽलिखति स्वकं हृदयम्।**
**तदेवोक्तं गलज्जलकम्........।**[४]

कवि पदबन्धरूपी तूलिका से अपने हृदय को लिखता है तो वह ग़ज़ल कहलाती है। वे ग़ज़ल को न केवल सम्वेदना से संयोजित करते हैं अपितु समानुभूति की समकक्षता की अपेक्षा करते हैं। वे स्थूणानिखनन न्याय से पुनः–पुनः अपने मन्तव्य को पुष्ट करते हैं–

**हृदयं मया सम्प्रेषितं,**
**पठितं त्वया वाक्याक्षरम्।।**[५]

मैंने तो हृदय सम्प्रेषित किया और तुमने उसे मात्र शब्द अथवा वाक्य समझ लिया? यह भी प्रकारान्तर से ग़ज़ल का लक्षण ही कहा जा सकता है। हृदयस्थ अनुभूति का विशुद्ध उद्गार ही ग़ज़ल है।

ग़ज़ल में मसृणता तथा कठोरता का सम्प्लव हमें चकित करता है। समकालीन संस्कृत कविता अपने समय का साक्ष्य प्रस्तुत करती हुई पाठक के हृदय को विद्ध कर देती है। वह कवि के मुख से निर्गलित साक्षात् कृपाणी है–**कविता कवेर्मुखनिर्गता साक्षात्कृपाणी निष्कृपा।**[६] 'निष्कृपा कृपाणी' यह कविता का विशेषण मात्र नहीं है वरन् कविता का प्रयोजन भी है। संस्कृत के कवियों पर जो सनातन आरोप हैं कि वे स्तुतिपरक अथवा उपदेशपरक काव्य ही रचते हैं तो **राजेन्द्र मिश्र** उसका भी निराकरण करते हुए कहते हैं–

**यातोऽस्ति काबीरीदशामभिराजराजेन्द्रोऽधुना।**
**सर्वेऽप्रमत्ताः सन्तु तेन गवेषितुं बद्धा कटी।।**[७]

अधुना कवि कबीर के समान लक्ष्यवेधी वाणी का प्रयोग करेंगे क्योंकि वे सत्यान्वेषण के लिए कटिबद्ध हो गये हैं। केवल सिद्धान्त के स्तर पर ही उनका यह प्रतिज्ञा–वाक्य सीमित नहीं अपितु प्रयोगविशदता से वे अनेकत्र निदर्शन प्रस्तुत करते हैं–

'यदि अहोरात्र हृदय में नारायण का दर्शन नहीं होता है तो उनके दर्शन हेतु मन्दिर में जाना व्यर्थ है।'[८] यहाँ कवि उसी प्रकार आडम्बर का निरास करते हैं जिस

प्रकार कबीर ने आडम्बरों पर प्रहार किया था।

**पापमार्गे यदारभ्य पादं धृतम्।**
**उन्नतिद्वारमुच्चैस्ततोऽपावृतम्।।**[९]

सुन्दर व्यङ्ग्य से कवि ने भ्रष्टाचरण पर प्रहार किया है। जब से मैंने पापमार्ग में पद-निक्षेप किया, तब से उन्नति का उच्च द्वार खुल गया। स्वयं देवता अपनी व्यापकता से मेरे समीप आ गये। भ्रष्टाचरण के माध्यम से जो तात्कालिक लाभ होते हैं, उन सब की परिगणना की गई है। ग़ज़ल को पढ़ते हुए ऐसा प्रतीत होता है कि ये परिस्थितियाँ समाज में प्रत्यक्षतः दृष्टिगोचर हो रही हैं।

सनातनता का समकालीनता के साथ अद्‌भुत संयोग काव्य को अनिर्वचनीय सौन्दर्य तथा गरिमा प्रदान करता है। सुकवि राजेन्द्र मिश्र ने परम्परा को पुनर्नवा कर नूतन अर्थविच्छितियों का सर्जन किया है। 'दामिनी दलिता' ग़ज़ल में कवि ने सहृदयों को झकझोरा है-

**महद्‌दुःखान्तनाट्यमहो नु जातं हायनं चैतत्।**
**हृता भूयोऽपि वैदेही द्रुपदजा कौरवैश्छलिता।।**[१०]

दामिनी-दलन के कारण यह वर्ष दुःखान्तनाटक ही सिद्ध हुआ। वैदेही एक बार पुनः अपहृत हो गई और द्रौपदी कौरवों के द्वारा पुनः छली गई। वैदेही और द्रौपदी के उपमानों को प्रस्तुत कर उन्होंने दामिनी-वृत्तान्त के साथ संयोजित कर दिया। सनातनता का पुनः संयोजन, कविता को भावोद्रेकता प्रदान करता है। **आचार्य श्रीनिवासरथ** के दिवङ्गत हो जाने पर कवि ने कादम्बरी की कथा को नवीन मिथक रूप में प्रस्तुत किया-

**ध्वस्तमालोक्य विन्ध्याटवीशाल्मलिम्।**
**बन्धुभिस्सार्धमार्तिङ्गतोऽयं शुकः।।**[११]

विन्ध्याटवी के शाल्मली को ध्वस्त हुआ देखकर यह शुकशावक बन्धुओं के साथ अत्यन्त सन्ताप को प्राप्त हो गया है। आचार्य रथ को शाल्मली तथा स्वयं को शुक के रूप में परिकल्पित कर कवि ने एक नया मिथक गढ़ा है। जो कादम्बरी से सुपरिचित हैं वे इस बन्द के सौन्दर्य का सम्यक् रसास्वादन कर सकते हैं।

वर्तमान काल तो वस्तुतः विस्मरण का काल है। यहाँ कृतज्ञता का भाव तो लुप्तप्राय ही है। ऐसे दारुण काल में आचार्य राजेन्द्र मिश्र गुरु तथा मित्रों के प्रति कृतज्ञता-ज्ञापन करते हैं। स्वकीय गुरुवर **प्रो० चण्डिकाप्रसाद शुक्ल** का स्मरण करते हुए उन्हें सारस्वत आलोक, गुणमय नमोवाक्, शिष्यों का स्पर्शमणि आदि विशेषणों से विभूषित किया गया। आचार्य श्रीनिवासरथ तो भगवती शारदा के यज्ञ हैं। कवि ने श्लेष के सुन्दर प्रयोग से उनके कृतित्व का सङ्केत किया-भूसुरों

(संस्कृतज्ञों/देवताओं) का वह नूतन मन्मथ (मम्मट/कामदेव) अब कहाँ है? कविता के माध्यम से आचार्य राधावल्लभ त्रिपाठी के लिए मङ्गलकामना करते हुए उनके व्यक्तित्व तथा कृतित्व को एकत्र निरूपित किया–

**युगसम्प्लवं पश्यन्नहो निजगीतिसाधनयाऽनिशम्।**
**लघुनौकयाऽब्धिं धीवरस्तरते हि राधावल्लभः।।**[१२]

सर्जना-पथ के सहचरों का स्मरण कवि के जीवन की धरोहर है। भावी पीढ़ी को संस्कृत के प्रति दृढ़ मूल अनुराग रखने वाले कवियों की विरासत भेंट करने वाले आचार्य राजेन्द्र मिश्र वस्तुतः प्रणम्य हैं।

अभिराज राजेन्द्र मिश्र सत्यकथन से संस्कृत ग़ज़ल को विस्तार प्रदान करते हैं। विषयवस्तु में उन्होंने क्रान्तिकारी परिवर्तन कर संस्कृत ग़ज़ल को उच्चता के शिखर पर आसीन कराया है। वे राष्ट्र तथा समाज की चिन्ता करते हैं। भारत की वर्तमान दुर्दशा से वे विषण्ण प्रतीत होते हैं–

**दीपकाधस्तलं तैमिरं श्रूयते,**
**तच्च दृष्टान्तभूतं न किं भारतम्।।**[१३]

'दीपक तले अन्धेरा होता है' इस कहावत का दृष्टान्त क्या भारतदेश नहीं है? कवि ने हिन्दी के प्रचलित मुहावरे से नूतन अर्थसंक्रान्ति की है जो कि आधुनिक संस्कृत का एक नया प्रतिमान है। इसी प्रकार कवि को देवताओं की लीलाभूमि भारत राक्षसों का घर प्रतीत होने लगा है–

**भारतन्तु दिविषदां रक्षसां गृहायते।**[१४]

ऐसी घोर निराशापूर्ण परिस्थिति में भी कवि की अस्मिता श्लाघनीय है। क्योंकि भारत का रजःकण होना भी कवि के लिए गौरवास्पद है। भारत-भूमि का रजःकण भी रत्न से अल्प नहीं हैं।

**कणोऽस्मि ध्रुवं भारतीमृत्तिकायाः,**
**न तत्किञ्चिदूनं नु रत्नाद् विभातम्।।**[१५]

यह गौरववचन हमें रोमाञ्चित करता है तथा सभी के सोये हुए स्वाभिमान को जागृत करता है। कवि को निज देश पर गर्व है, परन्तु उसकी दुर्दशा कथमपि सहनीय नहीं है।

आचार्य राजेन्द्र मिश्र ने ग़ज़ल में सौन्दर्य तथा प्रणय को नूतन भावबोध के साथ प्रस्तुत किया। प्रणय का उदात्त रूप माधुर्य का सञ्चार करता है। कवि का उक्तिवैचित्र्य वस्तुतः हृदयावर्जक है–

पार्वणं चन्द्रमासं प्रपश्यन्नहो,
त्वन्मुखं नैव जाने कुतस्त्वागतम्।।[१६]

आश्चर्य है कि मैं तो पूनम का चाँद देख रहा था। न जाने, कहाँ से आ गया तुम्हारा मुख। पूर्णिमा के चन्द्रमा से नायिका के मुख का साम्य-यह वचोभङ्गी आधुनिकता का भान कराती है। सौन्दर्य का लक्षण कवि ने सर्वथा पृथक् रीति से प्रस्तुत किया है-

एक बार जिसे देख लेने पर हृदय में विधाता का निर्माण-कौशल अङ्कित न हो जाये-वह आकृति ही क्या?[१७]

कवि केवल सौन्दर्य-गाथा का गान ही नहीं करता अपितु संस्कृत के कवि का नारी-विमर्श भी श्लाघनीय है, वह नारी के उच्चपद को नये अर्थो में रचता है। पृथिवी पर नारी किसी की भी शत्रु नहीं है अपितु वह देदीप्यमान पुरुषत्व की मातृका (आधारभूमि) है-

नारिः केषामपि भुवि नारी।
सा नरत्वमातृका विभाता।।[१८]

'गृहिणी गृहमुच्यते' इस भाव को जब कवि ग़ज़ल में व्याख्यायित करता है तो गृहिणी का सर्वभूमिका-निर्वाहिकारूप अनायास अभिव्यक्त हो जाता है। गृहिणी के अस्तित्व की स्वीकारोक्ति करता हुआ संस्कृत कवि समाज से भी यही अपेक्षा करता है-

गृहिण्यां पर्यवस्यन्त्येव सम्बन्धाः समे नूनम्।
विशेषो जीवने कश्चिन्न सचिवाद्वाऽथ शिष्याद्वा।।[१९]

अभिराज का कवित्व नाना विच्छित्तियों में भ्रमण करता हुआ भी प्रधानरूप से दार्शनिक-भावानुभूति को आत्मसात् करता हुआ प्रतीत होता है-

अहो जीवनं स्वप्नकल्पं व्यतीतम्.......[२०]
हया इन्द्रियाणां धृता वल्गाया नो।[२१]

मैं इन्द्रियों के घोड़ों की लगाम नियंत्रित नहीं कर पाया।

उपभोगितावाद का यह अनुवाद प्रायः ही प्रतीत होता है क्योंकि इन्द्रियों पर अनियन्त्रण ही उपभोगितावाद है। यही बाज़ारवाद का मूलमन्त्र है।

दार्शनिक सिद्धान्त को कविता का सौन्दर्य रोचक तथा सरल बना देता है-

जगदम्ब! लूतातन्तुजालनिभे शरीरे चिन्मयम्।
बद्ध्वाऽऽत्मकीटमिमं नु मे कियदवधि सङ्क्रीडिष्यसि।।

हे जगदम्ब! लूतातन्तु सदृश इस शरीर में चिन्मय आत्मारूपी कीड़े को बाँधकर कब तक खेल खेलती रहोगी।

कवि स्थितप्रज्ञता की अपेक्षा करते हुए कहते हैं—**मत्कृते तुल्यार्चनाऽप्यवमानना।**[२२]

जीवनदर्शन के अनेक प्रासङ्गिक सूत्रों का कवि ने सन्धान किया है। जीर्णता पर विजय पाने का विलक्षण सूत्र रचा गया है। स्वयं पर विश्वास ही अजर होने का अक्षुण्ण मार्ग है—

**तुलय नान्यं न चाप्यात्मानमपि तोलय परैस्सार्धम्।**
**भवात्मन्येव विश्वस्तो भविष्यसि जातु नो जीर्णः।।**[२३]

यह पृथिवी न धन से, न तलवार से और न ही आतङ्क से जीती जा सकती है वरन् यह तो शील से जीती जा सकती है।[२४] यह वर्तमान की दुर्दशा से उत्पन्न कवि-भाव है। धन, सत्ता तथा आतङ्क ने शील का अतिक्रमण कर दिया है अथवा शील को तिरस्कृत कर दिया है, उस शील को उच्चपीठिका पर पुनः संस्थापित करने के लिए संस्कृत-कवि कटिबद्ध है।

**न जातूत्पाद्यते विनतः कदापि।**[२५]
**शुचिता न सम्भवाऽऽसीत् खलु कज्जलप्रकोष्ठे।**[२६]
**अद्य वा श्वो भवेद् ध्रुवं मरणम्.......।**[२७]

इस प्रकार के अनेक सूत्र सामान्य का विशेष से संयोजन कराते हैं।

अभिराज का कवि सौष्ठव का कवि है। मुहावरों के नवार्थसन्धान द्वारा वे नित्य अपूर्व सौन्दर्य सर्जना कर चमत्कृत करते हैं—

**चन्द्रिका चतुर्दिवसीयेयं भूयोऽपि कालरात्रिर्नान्ता।**[२८]

चार दिन की चाँदनी है, फिर अँधेरी रात है। जब तक सेर को सवा सेर नहीं मिलता तब तक अपने ऊँचे होने का अभिमान क्यों न हो। पहाड़ के नीचे पहुँच कर ही ऊँट को अपनी लघुता का बोध होता है—

**स्यादन्यथा कथं नो स्वमहोच्चताभिमानः।**
**लघुतामवैति करभः पर्वतपदं नु वृत्वा।।**[२९]

'न रत्नमन्विष्यति मृग्यते हि तत्' इस सूक्ति को कवि ने लोकधर्मी शैली में रूपान्तरित करते हुए कहा—**न वा काञ्चनं हीरकं वृक्षवृन्ते, तदन्विष्याम्भो....।**[३०]

भाई! सोना और हीरा पेड़ की टहनियों पर नहीं लगे होते, उन्हें तो खोजा जाता है।

यदि सृष्टि के चमत्कार कवि को चमत्कृत करते हैं तो सुकवि अभिराज की पदशय्या हम सभी को चमत्कृत करती है। 'नमो मे नमः' इस ग़ज़ल में मूर्तिकाराय, देवकाराय, जीवकाराय, कण्ठकाराय, छिद्रकाराय, पथ्यकाराय, वैकटीकाय आदि को नमस्कार किया गया है। रदीफ और काफिये का अद्भुत संयोजन तथा लय और सौन्दर्य का समन्वय अभिराज जी की ग़ज़लों में रमणीयता का सञ्चार करते हैं।

रावणायते, दण्डकायते, शिलायते, पितृवनायते, ऊषरायते और कण्टकायते आदि क्रियापदों के प्रयोग के कारण ग़ज़ल का सौन्दर्य द्विगुणित हो गया है।

जिसके हाथ में तूलिका हो और सुन्दर वर्ण तथा पर्ण हों, वही चारु-चित्र की निर्मिति में सक्षम हो सकता है। तभी तो यह कवि-घोषणा सम्भव हो सकती है-

**तीर्णो मया काव्याम्बुधिर्न बिभेमि।**

आचार्य राजेन्द्र मिश्र कबीर के स्वर में स्वर मिलाकर कहते हैं कि उन्होंने झीनी-झीनी बुनी हुई काबीरी छादनिका (चादर) ज्यों की त्यों धर दी है। परन्तु मुझे तो यह विरोधाभास ही प्रतीत होता है, क्योंकि संस्कृत-सर्जना रूपी चदरिया को उन्होंने नूतन आयामों से समृद्ध किया है। ज्यों का त्यों नहीं रहने दिया। इसीलिए उनके स्वाभिमान ने उन्हें प्रतिज्ञा के लिए बाधित किया है-

**लेखन्या जातोऽजरोऽमरो।**
**निर्घुष्टो भारतरत्नोऽहम्।।**

अभिराज का कवि वह भारत रत्न है जिसके तरकश से लगभग ४०० ग़ज़लों का सन्धान हो चुका है। उनकी कविता आनन्त्य तथा सातत्य, संस्कृत की परम्परा का आनन्त्य तथा सातत्य है। आचार्य आनन्दवर्धन कहते हैं-'अवस्था, देश, काल आदि विशेषों से स्वभावतः शुद्ध वाच्य भी अनन्त बन सकता है'।[३१] कविता में वस्तुगत अनन्त सम्भावनायें होती है और आचार्य राजेन्द्र मिश्र उस अनन्तता को द्विगुणित करते हुए नूतन प्रतिमानों के प्रतिमान हैं।

**जयनारायण व्यास वि०वि०, जोधपुर** — **प्रो० सरोज कौशल**
**१७ फरवरी, २०१५ ई०** — **संस्कृत-विभाग**

## सन्दर्भ

१. यतिष्येऽधुना, औदुम्बरी, पृ० ४२
२. या तृषाऽभूद् वृथा, औदुम्बरी, पृ० ४२
३. प्रशस्ताद्वाऽप्रशस्ताद्वा, पृ० ३

४. हविर्धानी, पृ० ५२
५. औदुम्बरी, पृ० ५६
६. औदुम्बरी, पृ० ५४
७. बद्धा कटी, ३१
८. कथमावयोः सख्यम्, ३३
९. रौरवमुद्घाटितम्, पृ० १८
१०. दामिनी दलिता, पृ० १०
११. संस्कृज्ञो न को जायते सव्यथः, पृ० ५२
१२. तनुते हि राधावल्लभः, पृ० २१
१३. प्रमादेन नामागतम्, पृ० ७
१४. किन्न मन्दुरायते, पृ० ११
१५. महानायकत्वम् न वाऽऽप्तम्, पृ० ४४
१६. प्रमादेन नामाऽगतम्, पृ० ७
१७. सकृदपि निपीय न यां विधेः कौशलमुरस्यनुशंसितम् ... साऽऽकृतिरेव का। पृ० ६
१८. दुहिता जाता, पृ० २०
१९. प्रशस्ताद्वाऽप्रशस्ताद्वा, पृ० ३
२०. कथं गोपयानि, पृ० ६२
२१. कथं गोपयानि, पृ० ६२
२२. तुल्यार्चनाऽप्यमानना, पृ० ५८
२३. पृच्छ स्वयम्, पृ० ५३
२४. न वित्तैर्न खड्गैर्न चातङ्कभारैः।
२५. निर्गुरु ज्ञातम्, पृ० ४०
२६. स्वप्नो मया न दृष्टः, पृ० २२
२७. ते कृतज्ञोऽहम्, पृ० ९
**२८. क्षमसे यदि, पृ० ५५**
**२९. कथयन्ति ते सगर्वम्, पृ० ४१**
३०. त्वमेको गतः, पृ० २६
३१. ध्वन्यालोक, ४।७

●

# नान्दीवाक्

पिछले दो वर्ष (२०१४-२०१५) रचना एवं प्रकाशन दोनो ही दृष्टियों से स्मरणीय रहे। ईस्टर्नबुकलिंकर्स, दिल्ली को प्रकाशनार्थ सन्धानसिन्धु (हिन्दी शोध लेख-संग्रह) तथा ज्ञानाञ्जनशलाका (संस्कृत शोध लेख-संग्रह) दिया।

अक्षयवट प्रकाशन, इलाहाबाद ने महर्षिचरितामृतम् काव्य प्रकाशित किया जो महर्षिकल्प, पद्मश्री आचार्य आद्याप्रसाद मिश्र जी के व्यक्तित्व-कर्त्तृत्व पर आधारित है।

वैजयन्तप्रकाशन, इलाहाबाद ने विद्योत्तमानाटिका तथा नाट्यसप्तपदम् का अभिनव विशिष्ट संस्करण तो प्रकाशित किया ही, कुछ नई कृतियाँ भी उपन्यस्त कीं–औदीच्ययक्षगानम् (नौ यक्षगानों का संग्रह), औदुम्बरी (६७ गलज्जलिकाएँ) तथा गीतभारतम् (१२ सर्गों में विभक्त वृहत् राष्ट्रिय काव्य)।

उ०प्र० संस्कृतसंस्थान, लखनऊ ने प्रकाशनार्थ एक यात्राग्रन्थ चोलाञ्चलदर्शनम् स्वीकार किया है। स्वयं राष्ट्रिय संस्कृतसंस्थान, नई दिल्ली तथाउसके लखनऊ-परिसर ने अभिराजदण्डकम् (२३ दण्डक-संग्रह) तथा शतकपञ्चदशी को (१५ शतकों का संग्रह) अधर में लटका रखा है पिछले दो वर्षों से।

इस युग के लेखकों के समक्ष प्रकाशन एवं ग्रन्थ-वितरण की विकट समस्या है। फिर भी मन है कि मानता नहीं! हम कुछ न कुछ प्रकाशित करते ही रहते हैं, बिना कठिनाइयों की परवाह किये। सहृदय एवं प्रतिष्ठित विदुषी प्रो० सरोज कौशल ने (जोधपुर विश्वविद्यालय), औदुम्बरी की समीक्षा यत्नपूर्वक की है, एतदर्थ कृतज्ञ हूँ। इस सारवती समीक्षा से पाठकों का प्रभूत लाभ होगा।

इलाहाबाद
३ मई, २०१५ ई०

सहृदय-वंशवद
अभिराजराजेन्द्रमिश्र

●

# अभिराजमधिकृत्य

केवलं ग़ज़ल इति प्रसिद्धायाः काव्यविधायाः बलात् संस्कृतीकरणं रुचिरं नास्ति। इदन्तु पण्डितम्मन्यानां कवीनां हठधर्मितैव प्रकाशयति।

अद्यतनग़ज़लगीतिकारेषु सर्वथा कुशलः नवकाफिया-रदीफप्रयोगपटुः सरसमधुरा ऽभिव्यक्तिप्रवीणः कविरस्ति **अभिराजराजेन्द्रमिश्रः**।

मन्यते तु स श्रेष्ठः संस्कृतग़ज़लकविर्यस्य ग़ज़लेष्वभिनवोक्तिनैपुण्यं साम्प्रतिककथ्यानां निवेशश्च रसिकहृदयानावर्जयतः।

**दूर्वा ( पुनरुन्मेषाङ्कः )**
**पृ० ८२-८६**
**मार्च-मई, २००४ ई० अङ्कः**

**डॉ० हरीराम आचार्यः**
**साम्प्रतिकसंस्कृतकवितायां**
**नव्यत्वस्य मीमांसनम्**

•

# विषयानुक्रमणिका

●

# औदुम्बरी

।। चरन्वै मधुविन्देत चरन्स्वादुमुदुम्बरम् ।।

२.६.२०१२ से २४.१.२०१५ के बीच प्रणीत
गलज्जलिकाएँ

## गणिकेव तेऽस्ति कृतज्ञता

अज्ञानकान्तारस्थिता खिन्नैव भाति बहुज्ञता।
आप्तं न पुरुषं जिन्वती गणिकेव तेऽस्ति कृतज्ञता।।१।।

मौकुलिकुलाये स्थापयस्यण्डस्थितं ननु जातकम्।
बन्धो! प्रतीयत एव ते तेनैव मञ्जुमनोज्ञता।।२।।

दृष्ट्वैव पापघटं भृतं लङ्कापतेस्तमहोऽत्यजः।
ननु दर्शिता भवता समुचिते ह्यवसरे समयज्ञता।।३।।

त्वं वेत्सि मामज्ञं सखे! त्वां वेद्म्यहं खलशेखरम्।
निर्णयति कुलपतिरेव, कस्य गरीयसी किल विज्ञता।।४।।

भक्तिर्बहूनुपसेवते ते ऽसौ जबालासन्निभा।
इह सूतवानसि सत्यकाममितोऽधिका न नयज्ञता।।५।।

दृग्भ्यां शृणोषि समन्ततः कर्णद्वयेन विलोकसे।
अपदश्चलसि चित्रा नु ते ब्रह्मोपमैव समज्ञता।।६।।

वृद्धिं न सहसे कथमपि त्वयि वार्त्तिकं श्रुतचरमिदम्।
हयमोचनेऽसि पुरन्दरः प्रथितैव ते शतयज्ञता।।७।।

ननु गल्लवादनमात्रमेव मया कथञ्चित् शिक्षितम्।
सुषिरेऽवनद्धे ततघने क्व न ते प्रशस्तगुणज्ञता।।८।।

अभिराजमपि शिष्यं विधाय गुरो! कृतार्थय जीवनम्।
चिरसंस्तुता स्यादिह यथा तव सिन्धुता मम बिन्दुता।।९।।

रात्रि : १०.४५
संस्थान-अतिथिकक्षः, २.०६.२०१२ ई०

•

अज्ञान के जङ्गल में उद्भ्रान्त पण्डिताई भी दुःखी ही रहती है। तुम्हारी कृतज्ञता भी मित्र! विश्वसनीय व्यक्ति (आश्रय) को न चुन सकने वाली गणिका के समान है।।१।।

अण्डे में विद्यमान जातक (सन्तान) को कौवों के घोसले में स्थापित कर रहे हो। बन्धुवर! बस इतने से ही समझ में आ रही है तुम्हारी विलक्षण चातुरी।।२।।

लङ्कापति (रावण) के पाप-घट को भरा हुआ देखकर ही (विभीषण!) तुमने उसका त्याग कर दिया। (भैया विभीषण!) आपने सही अवसर पर अपनी नीतिमत्ता प्रदर्शित की।।३।।

मित्र! तुम मुझे मूर्ख समझते हो और मैं तुम्हें कमीनो का शिरोमणि मानता हूँ। अब कुलपति ही निर्णय करेगा कि किसकी समझदारी श्रेष्ठ है?।।४।।

**जबाला** के समान तुम्हारी भक्ति (निष्ठा) भी बहुतों की सेवा करती रही है। इसी के बल पर पैदा कर लिया तुमने **सत्यकाम** (जैसे अपने भाग्य) को। इससे अधिक नीति-निपुणता और क्या होगी?।।५।।

दोनों आँखों से (तुम) चौतरफा सुन लेते हो और दोनों कानों से देख लेते हो। बिना पैर के ही चल भी लेते हो। विलक्षण है परब्रह्म के समकक्ष तुम्हारी समग्रता।।६।।

तुम्हारे विषय में यह वार्तिक सुना जा चुका है कि (तुम किसी की) वृद्धि (उन्नति) सह नहीं पाते हो। (दूसरों का) घोड़ा चुराने में तुम पुरन्दर हो। जगजाहिर है तुम्हारी शतयज्ञता।।७।।

मैंने तो जैसे-तैसे बस गाल भर बजाना सीखा है। परन्तु बन्धो! सुषिर (वंशी) अवनद्ध (मृदंगादि) तत (वीणा) तथा घन (कांस्यताल) तुम्हें कहाँ महारत नहीं हासिल है? ।।८।।

हे गुरो! **अभिराज** को भी (अपना) शिष्य बना कर जीवन को कृतार्थ बना दो जिससे कि चिरसंस्तुत (जगत्प्रसिद्ध) हो जाय, आपकी सिन्धुता और मेरी बिन्दुता।।९।।

●

## गन्तुकामोऽस्म्यहम्

निर्भरं मां सखे! पश्य यायावरं।
विश्रमार्थं क्वचिद् गन्तुकामोऽस्म्यहम्।।१।।

संसृतौ हन्त जाता वृथा मे रतिः।
साम्प्रतं श्रीहरौ रन्तुकामोऽस्म्यहम्।।२।।

मर्षणीयोऽस्मि भो दुष्कृतानां कृते।
किञ्च, युष्मानपि क्षन्तुकामोऽस्म्यहम्।।३।।

भेदरेखा क्वचिच्चापि कृष्टा मया।
तामिदानी स्वयं मार्ष्टुकामोऽस्म्यहम्।।४।।

हन्त, भूयो भवेत्सङ्गमो वा न वा।
त्वां तथाप्यङ्ग! सन्द्रष्टुकामोऽस्म्यहम्।।५।।

तीरसंस्थः कियद्वा विभेष्यामि भोः।
तन्महाम्भोनिधिं तर्तुकामोऽस्म्यहम्।।६।।

कीर्तिसीता यथाऽऽप्ता गुणैर्नात्मनः।
रावणीभूय तां हर्तुकामोऽस्म्यहम्।।७।।

रासभा अश्वतां यान्ति कैर्नूद्यमैः।
तच्च दिल्ल्यां वसन् ज्ञातुकामोऽस्म्यहम्।।८।।

यादृशश्चासि, मह्यं परं रोचसे।
सादरं लोक! तद् वक्तुकामोऽस्म्यहम्।।९।।

रात्रौ नववादनम्
संस्थान-अतिथिकक्षः, ३.०६.२०१२ ई०



मित्र! देख लो आँख भर मुझ जैसे यायावर (पथिक) को। विश्राम करने के लिए (अब) कहीं जाना चाहता हूँ।।१।।

संसार के प्रति मेरी आसक्ति (अब) झूठी सिद्ध हो चुकी है। अब तो श्री हरि में रमण करने की इच्छा हो चली है मेरी।।२।।

मेरे भाइयों! अपने दुष्कृत्यों के लिए (आप सब द्वारा) क्षमा करने योग्य हूँ। इतना ही नहीं, तुम लोगों को भी क्षमा करना चाहता हूँ (तुम्हारी गल्तियों के लिए।।३।।

यदि मैंने कहीं भी भेद-भाव की रेखा खींची थी तो इस समय उसे स्वयं ही मिटा देने को इच्छुक हूँ।।४।।

ओफ् पुनः (अगले जन्मों में) भेंट हो, या न हो। मेरे प्रियवर! फिर भी तुम्हें देखने की ललक बनी रहेगी।।५।।

तट पर खड़ा-खड़ा कितना भय खाता रहूँगा, भाई! इसलिए महासागर को पार ही कर लेना चाहता हूँ।।६।।

कीर्तिरूपी सीता अपने गुणों से तो प्राप्त हो नहीं पाई। तो अब रावण बनकर ही उसे अपहृत करना चाहता हूँ।।७।।

भला किस उद्यम (कौशल) से गधे, घोड़े का पद प्राप्त कर लेते हैं? यह गुर दिल्ली में रहकर जानना चाहता हूँ।।८।।

जैसे भी हो, मुझे बहुत पसन्द हो। हे लोक! (मद्युगीन समाज) यह तथ्य आदरपूर्वक तुम्हें बताना चाहता हूँ।।९।।

●

## प्रशस्ताद्वाऽप्रशस्ताद्वा

उपेताऽद्वैततां प्रीतिर्निकामं भङ्गुरैवाऽसीत्।
शिखररूढो न को निपतैदिदानीं वाऽथ पश्चाद्वा।।१।।

मया कुम्भीलकोऽङ्गीकृत्य बन्धुत्वेन, यद् विहितम्।
फलं सोढव्यमासीत्तस्य, पुण्याद्वाऽथ पापाद्वा।।२।।

प्रमादं मा कृथा बन्धो! न शास्त्रे स्वैरता युक्ता।
भवेन्ननु वृत्तभङ्गोऽप्यक्षराद् दीर्घाददीर्घाद्वा।।३।।

अवश्यं वर्तमानादेव भेतव्यं दुराधर्षात्।
भयं किं कल्पितान्नृणामतीताद्वा भविष्याद्वा।।४।।

प्रसूतोऽभुक्तमूले चेज्जगौ तुलसी सियारामम्।
अलं तल्लग्नसारण्या, किमार्द्रातोऽथ पुष्याद्वा।।५।।

गृहिण्यां पर्यवस्यन्त्येव सम्बन्धाः समे नूनम्।
विशेषो जीवने कश्चिन्न सचिवाद्वाऽथ शिष्याद्वा।।६।।

न किं श्वासाज्जुहोमि कलेवरं मखवेदिकां कृत्वा।
किमन्यत्पुण्यमाप्तव्यं हुतादथवा हविष्याद्वा।।७।।

समुद्रे व्योम्नि चेद्यात्रा ध्रुवं परमेश्वराधीना।
अलं प्रस्थानशुभयोगात्प्रशस्ताद्वाऽप्रशस्ताद्वा।।८।।

**कुले भवभूतिपण्डितराजयोर्जातोऽभिराजोऽहम्।**
नृपान्नापेक्षितं किञ्चिन्मदीयं नो समाजाद्वा।।९।।

रात्रि : ९.२५ वादने
संस्थानातिथिकक्षे, ३.०६.२०१२ ई०

●

परिपूर्ण रूप से अद्वैतता को प्राप्त प्रीति टूटने-बिखरने ही वाली थी (क्यों न हो ऐसा?) शिखर पर पहुँचा कौन व्यक्ति अभी (इसी समय) या बाद में (वहाँ से) गिरेगा नहीं? ।।१।।

चोर (साले) को भाई के रूप में अपनाकर मैंने जो (अकृत्य) किया था उसका फल तो (मुझे) भोगना ही था–पुण्य से अथवा पाप से।।२।।

मेरे भाई! प्रमाद मत करो। शास्त्र में मनमानापन नहीं चलता है। एक अक्षर से भी छन्दोभङ्ग हो सकता है–चाहे वह दीर्घ हो अथवा लघु।।३।।

दुराधर्ष (अनतिक्रमणीय) वर्तमान से ही अवश्य भय खाना चाहिए। मनुष्यों द्वारा कल्पित किये गये **अतीत** से अथवा **भविष्य** से क्या डरना? ।।४।।

**अभुक्तमूल** नक्षत्र में भी पैदा होकर यदि (गोस्वामी) तुलसीदास ने **सियाराम** का गुणगान किया तो फिर उनकी **लग्नसारिणी** किस काम की रही? आर्द्रा अथवा पुष्य (में भी जन्म लेने) से क्या मिलता? ।।५।।

सारे के सारे सम्बन्ध, निश्चय ही घरवाली में ही समाए रहते हैं। जीवन में पृथक् सचिव अथवा शिष्य होने से कोई विशेष (लाभ) नहीं होता (पत्नी सबकी भूमिका निभाती है अकेली ही)।।६।।

शरीर को यज्ञकुण्ड बनाकर क्या श्वासों का हवन नहीं कर रहा हूँ? हवन की गई अथवा (भविष्य में) हवन की जाने वाली सामग्री से और कौन पुण्य मुझे प्राप्त करना है? ।।७।।

यदि यात्रा समुद्र अथवा आकाश में हो रही है तो निश्चय ही वह परमेश्वर (की कृपा) के अधीन है। फिर तो यात्रा का प्रस्थान-योग प्रशस्त हो अथवा अप्रशस्त, कोई फर्क नहीं पड़ता।।८।।

भवभूति और पण्डितराज के वंश में **अभिराज** (राजेन्द्र) पैदा हुआ हूँ। (परन्तु) न राजा से मेरी कोई अपेक्षा है, न ही समाज से।।९।।

●

## कुठारोऽभवम्

भेदिनां सम्प्रदाये कुठारोऽभवम्।
आयुधानां निकाये कुठारोऽभवम्।।१।।

केन निर्मापितः केन वा निर्मितः।
हा विधे! आततायी कुठारोऽभवम्।।२।।

छेदनं भेदनं मल्ललाटाङ्कितम्।
शोणितास्वादपायी कुठारोऽभवम्।।३।।

मानवानां वनानां पशूनामरिः।
मृत्युसन्तापदायी कुठारोऽभवम्।।४।

कं नु लोकोपकारं स्मरेयं स्वकम्।
सौहृदस्वप्नशायी कुठारोऽभवम्।।५।।

मय्यहो जामदग्न्यस्तथा प्रीतिमान्।
येन तन्नामदायी कुठारोऽभवम्।।६।।

जायते यन्मणिस्पर्शतः काञ्चनम्।
तत्समज्ञाऽवसायी कुठारोऽभवम्।।७।।

यन्नु लौहं दृढत्वप्रतीकं मतम्।
वंशजस्तस्य मायी कुठारोऽभवम्।।८।।

हन्त मर्मन्तुदा मे व्यथा, निष्फला।
कस्य नो प्रत्यवायी कुठारोऽभवम्।।९।।

खण्डितो नैकधा दुष्प्रहाराहतः।
वह्निना युक्तकायी कुठारोऽभवम्।।१०।।

रात्रौ : ८.४५ वादने
संस्थानातिथिकक्षे, ५.०६.२०१२ ई०

काटने वालों के सम्प्रदाय में मैं कुल्हाड़ा बना। हथियारों के समूह में मैं कुल्हाड़ा बना।।१।।

किसने बनवाया (मुझे) अथवा किसने निर्मित किया? हे विधाता! आततायी कुल्हाड़ा बना मैं।।२।।

मेरी भाग्यलिपि में (ही) लिखा था–छिन्न-भिन्न करना। खून के स्वाद का जायका लेने वाला कुल्हाड़ा बना मैं।।३।।

मनुष्यों, वनों और पशुओं का अरि, मृत्यु-सन्ताप देने वाला कुल्हाड़ा बना मैं।।४।।

अपने किस लोकोपकार को भला स्मरण करूँ? मित्रता (सद्भावना) का स्वप्न देखने वाला कुल्हाड़ा बना मैं।।५।।

आश्चर्य है कि **जमदग्निनन्दन परशुराम** भी मुझमें कुछ ऐसे प्रीतिमान हो उठे कि उन्हीं के नाम का स्मरण कराने वाला **(परशुराम)** कुल्हाड़ा बना मैं।।६।।

जो (लोहा) मणि (स्पर्शमणि=पारस) के स्पर्शमात्र से काञ्चन बन जाता है, उस मणि की कीर्ति को भी समाप्त कर देने वाला कुल्हाड़ा बना मैं (अर्थात् पारस को छूकर भी मैं सोना नहीं बना। लोहे का कुल्हाड़ा ही बना रहा।।७।।

जो लोहा दृढ़ता का प्रतीक माना जाता है, उसी के खानदान में जनमा मायावी कुल्हाड़ा बना मैं।।८।।

आह! मर्म को कुरेदने वाली तथा निष्फल है मेरी व्यथा (मेरी पीड़ा भी किसी को प्रभावित नहीं करेगी) भला किसका अनभीष्ट (वैरी) कुल्हाड़ा नहीं बना मैं? ।।९।।

दुष्प्रहारों से आहत होकर (मैं भी) अनेक बार खण्डित हुआ। परन्तु पुनः बन गया (साबूत) कुल्हाड़ा आग की ऊष्मा में जोड़-जोड़ कर।।१०।।

●

# नो स्मरिष्यामि

यथाकालं पुनर्जन्माऽप्य बालोऽहं भविष्यामि।
अहो, भूयोऽपि कृत्रिमपुत्रिकाभिरहानि नेष्यामि।।१।।

पुनर्जननीसमुत्सङ्गे लयेरिकया मुदङ्गमितः।
शिथिलयन्नात्मसंहननं घनस्वापं गमिष्यामि।।२।।

पुनस्सा मातुले चन्द्रे समुत्कण्ठा सनिर्बन्धा।
अमृतगाथां पितामह्योदितां भूयोऽपि पास्यामि।।३।।

पुनस्सा चर्चरी मित्रेषु तत्कूकूरुतं रम्यम्।
प्रगुप्तान्वेषणिकया स्वीयचित्तं रञ्जयिष्यामि।।४।।

भवेद्भूयो ऽक्षरारम्भः समासक्तिर्धुसद्वाण्याम्।
पुनश्छन्दोविचित्या निर्भरं क्रीडां करिष्यामि।।५।।

मिलिष्यन्त्येव पुनरपि कान्तवल्लभभास्करप्रणवाः।
समं मणिमाधवाभ्यां नवयुगं भूयो विधास्यामि।।६।।

जगन्नाथः प्रतनुकण्ठः भवेज्जन्मान्तरे कान्तः।
सनातन एव कान्तस्स्यादहं को वा भविष्यामि।।७।।

नवीनः परिचयो भविता नवीना स्थापना चापि।
पुराणी प्रत्यभिज्ञप्तिर्विनङ्क्ष्यति नो स्मरिष्यामि।।८।।

प्रभो! एतद्युगीना रावणाः सार्धं न जायेरन्।
यदि स्युस्ते, जनिं स्वां तर्हि सप्रणयं निषेत्स्यामि।।९।।

रात्रौ : १०.२५ वादने
संस्थानातिथिकक्षे, ५.०६.२०१२ ई०

समय आने पर पुनः (नया) जन्म पाकर मैं बच्चा बनूँगा। वाह! एक बार पुनः गुड्डे-गुड़ियों (के खेल) से दिन बिताऊँगा।।१।।

लोरियों से आह्लादित होकर, अपने शरीर को शिथिल करता हुआ मैं पुनः माँ की गोदी में गहरी नींद में सो जाऊँगा।।२।।

फिर चन्दा मामा के प्रति होगी वही ललक और (उन्हें) प्राप्त करने की जिद। दादी के मुँह से कढी अमृतसनी कहानियों को पुनः सुनूँगा।।३।।

फिर होगी मित्रों के साथ वही धमाचौकड़ी और वहीं रमणीय **लुकाछिपी** का खेल! **बुझौलिया** के खेल से अपना मनोरञ्जन करूँगा।।४।।

फिर होगा (विद्यालय में) मेरा अक्षरारम्भ! (फिर होगी) देववाणी संस्कृत में गहरी आसक्ति! फिर एक बार छन्दोरचना से जी भर क्रीड़ा करूँगा।।५।।

फिर एक बार मिलेंगे कान्त (रमाकान्त शुक्ल) वल्लभ (राधावल्लभ) भास्कर (भास्कराचार्य त्रिपाठी) तथा प्रणव (इच्छाराम द्विवेदी)। मणि (जनार्दनप्रसाद पाण्डेय) तथा माधव (हर्षदेव) को साथ लेकर पुनः नवयुग का निर्माण करूँगा।।६।।

(कहीं ऐसा न हो कि) अगले जन्म में रमाकान्त शुक्ल, जगन्नाथ पाठक जैसे सौम्यकण्ठ हो जायँ। या फिर, रेवाप्रसाद द्विवेदी 'सनातन' जी ही रमाकान्त शुक्ल न हो जायँ? (उस परिवर्तन में) मैं (अभिराजराजेन्द्र) किसकी तरह हो जाऊँगा? ।।७।।

नया परिचय होगा, नई स्थापना भी होगी। पुरानी (इस जन्म की) पहचान नष्ट हो जायेगी। कुछ भी स्मरण नहीं कर पाऊँगा।।८।।

प्रभो! (बस यही प्रार्थना है कि) इस युग के **रावण** (पुनः) साथ ही साथ न पैदा हो जायँ। यदि उन्हें भी पैदा ही होना है तो फिर मैं प्रेमपूर्वक अपने पुनर्जन्म को (उनके साथ) खारिज करना चाहूँगा।।९।।

•

## तदाऽऽयतिरेव का?

वाप्या यया न तृषा हृता तस्याः सखे! स्मृतिरेव का?
नियतिर्नितान्तबलीयसी तस्याः सखे! गतिरेव का?।१।।

एकान्तरतिरिह चारुदत्ते नास्ति कस्याश्चिद्यदि।
तस्यास्तु गणिकायास्तदा सौन्दर्यसङ्गतिरेव का।।२।।

दयितं यियासुं प्रेक्ष्य या जाता न हन्त जलाकुला।
दृष्टेः प्रियायास्तर्हि भो विरहव्यथाऽऽहतिरेव का।।३।।

सकृदपि निपीय न यां विधेः कौशलमुरस्यनुशंसितम्।
चञ्चलहृदयमृगवागुराभूताऽथ साऽऽकृतिरेव का।।४।।

अह्नाय यद्गुणचन्द्रिकास्नाताः समे प्रतिवेशिनः।
चित्तप्रसूनविकासिनी, यदि नैव, सन्ततिरेव का।।५।।

मौनेन यस्या नष्टमेव ममाऽभिशापितजीवनम्।
स्वात्मानमम्बां भणति सा मम हन्त सम्प्रति, सैव का।।६।।

कीरो वरं ननु पञ्जरे हरिनामगीतोत्थापकः।
प्रत्युषसि कर्णविभेदिनी कलविङ्कसंहतिरेव का।।७।।

सन्त्येव कुटिला भ्रामिकास्त्रिदिशस्सरण्योऽनेकशः।
या त्वद्गृहं नासादयेन्निभृतं सखे! सृतिरेव का।।८।।

गीतान्यधीत्याख्याहि मामाह्लादयन्ति मनो न वा।
मय्यपसृते जाता समुच्छ्वसितिस्तदाऽऽयतिरेव का।।९।।

अपराह्णे : ४.२२ वादने
संस्थानातिथिकक्षे, ७.०६.२०१२ ई०

•

जिस बावड़ी ने (लोगों) की प्यास नहीं बुझाई, मित्र! उसे क्या स्मरण करना? नियति (भाग्यलिपि) अतिशय बलवती होती है। मित्र! उसकी निश्चित गति कैसी? ।।१।।

यदि **चारुदत्त** के प्रति इस संसार में किसी की एकान्त-रति (नैष्ठिक प्रीति) नहीं है तो उस गणिका (वसन्तसेना) की सुन्दरता का औचित्य ही क्या? ।।२।।

प्रियतम को प्रस्थानोत्सुक देखकर जे अश्रुपर्याकुल नहीं हो उठी हाय! प्रियतमा की उस दृष्टि (आँख) का विरह-व्यथा से विथर जाना ही कैसा?।।३।।

एक ही बार डूब कर जिसे देख लेने पर, हृदय में विधाता का निर्माण-कौशल अङ्कित नहीं हो उठा, चञ्चल हृदय-रूपी हिरन को फँसाने वाली बन्धनरज्जु (जाल) सरीखी वह आकृति (रमणी) ही क्या? ।।४।।

सचमुच सारे के सारे पड़ोसी जिसकी गुणचन्द्रिका में स्नान करते हों और जो चित्त-प्रसून (हृदयपुष्प) की विकासिनी हो–यदि ऐसी न हो तो फिर वह सन्तति ही क्या? ।।५।।

(युवावस्था में) जिसकी चुप्पी से मेरा अभिशप्त जीवन ही नष्ट हो गया जो अब अपने को माँ समझती है (बच्चों का) उससे मेरा क्या लेना-देना? ।।६।।

हरिनाम सुनाकर जगाने वाला पिंजरे में बन्द सुआ भी सचमुच श्रेष्ठ हैं। भोर होते ही, कान फोड़ने वाली (मुक्त) गौरय्यों की वह टोली किस काम की? ।।६।।

टेढ़ी-मेढ़ी, भ्रान्ति पैदा करने वाली राहें तीनों दिशाओं में कितनी ही हैं! **परन्तु जो चुपचाप तुम्हारी देहरी तक न पहुँचा दे। मित्र! वह राह ही कैसी? ।।८।।**

मेरे गीतों को सुनकर बताओ तो कि ये मुझे और मेरे मन को आह्लादित करते हैं या नहीं? मेरे चले जाने पर यदि तुम्हें आनन्द-रोमाञ्च हुआ भी तो उसकी नियति क्या? (मैं तो कृतार्थ नहीं हुआ न)।।९।।

●

## प्रमादेन नामाऽगतम्

विस्मृतौ ते मया भूरियत्नाः कृताः।
किन्तु वाचि प्रमादेन नामाऽगतम्।।१।।

पार्वणं चन्द्रमासं प्रपश्यन्नहो।
त्वन्मुखं, नैव जाने, कुतस्त्वागतम्।।२।।

दीपकाधस्तलं तैमिरं श्रूयते।
तच्च दृष्टान्तभूतं न किं भारतम्।।३।।

द्वारि तिष्ठन्तमालोक्य दुःखातिथिं।
व्याहृतं द्रागकस्मान्मया स्वागतम्।।४।।

कीदृशीयं रतिर्दर्शिता बन्धुभिः।
मन्निवासाय लाक्षागृहं कारितम्।।५।।

हन्त, नीतं पराऽनुग्रहैर्यत्त्वया।
जीवनं तन्मयैकाकिना यापितम्।।६।।

सोपहासं नु बाकाद्यतो द्रावितः।
हन्त, हंसेन भूयस्तदासादितम्।।७।।

वाचि सिद्धेन कीरेण केनागसा।
जीवनं दुर्गमे पञ्जरे धारितम्।।८।।

यन्मनोमन्थने कालकूटं सृजेत्।
प्रत्नवृत्तं सखे! तत्कथं स्मारितम्।।९।।

सन्ध्यायां : ६.४५ वादने
संस्थानातिथिकक्षे, ८.०६.२०१२ ई०

•

तुम्हें भुलाने में मैंने प्रभूत यत्न किये। तथापि प्रमादवश (मेरी) जबान पर (तुम्हारा) नाम आ (ही) गया।।१।।

आश्चर्य है, मैं तो देख रहा था पूनम का चाँद! नहीं जानता कि कहाँ से उस पर तुम्हारा मुख दीखने लगा।।२।।

सुनते हैं कि दिये के तले में अँधेरा होता है। तो क्या इसका दृष्टान्तभूत भारत राष्ट्र नहीं है? ।।३।।

दरवाजे पर खड़े हुए **दुःखरूपी अतिथि** को देखकर मैंने अकस्मात् ही उसके लिये **'स्वागत'** कहा (अतिथि के स्वागत की आदतवश)।।४।।

भाइयों ने यह कैसी (विलक्षणा) प्रीति दिखाई कि मेरे आवास-हेतु **लाक्षागृह** बनवा दिया।।५।।

ओफ्, दूसरों की टुकड़खोरी पर जो जीवन तुमने (आराम से) बिता दिया, वही (जीवन) मैंने **अकेलेपन** में काट लिया।।६।।

जिन बगुलों की टोली से, उपहास करके भगाया गया था। हाय! राजहंस ने दुबारा पुनः उसी का दामन पकड़ा।।७।।

(सोचता हूँ कि) वाक्सिद्ध शुक ने, किस अपराध के कारण (अपनी) जिन्दगी कठोर पिंजरे में बिताई।।८।।

मित्र! वह पुरानी बात तुमने क्यों स्मरण करा दी जो मन को मथ दे और कालकूट पैदा कर दे।।९।।



## कज्जलानां प्रकोष्ठे

कज्जलानां प्रकोष्ठे न यायाः सखे!
एकरेखा तदीया भवेत्सङ्गता।।१।।

वीथिका प्रत्यभिज्ञायते साऽखिलैः।
तत्र गत्वा सकृच्चापि कीर्तिर्गता।।२।।

शैशवाद् वार्द्धकेऽहं झटित्यागतः।
**यत्क्षणे जन्मदात्री दिवं मे गता।।३।।**

तादृशीं तातभक्तिं कथं संस्तुवे।
यन्निदेशात्सुतेन स्वमाता हता।।४।।

त्वन्मतिर्हा विधे! स्यात्कथं सम्मता।
यन्मयूरा भुजङ्गाशना निर्मिताः।।५।।

सोऽस्तु वृद्धो युवा, सस्मरो वाऽस्मरः।
यत्प्रियाऽऽसीदुमा तद्भवायाऽर्पिता।।६।।

**विश्वबन्धुत्वबीजं ध्रुवं रक्षितम्।**
**भारते यावदास्ते गवी संस्कृता।।७।।**

कच्चराऽन्वेषिणं बालमन्वीक्षते।
वाहनात् कुक्कुरो हा हता दीनता।।८।।

नो ऽभिराजं तथाऽन्यद् दुनोति ध्रुवम्।
जम्बुकानां यथा व्याजपारीन्द्रता।।९।।

रात्रौ : १०.४८ वादने
संस्थानातिथिकक्षे, १०.०६.२०१२ ई०

•

काजलो की कोठरी में मत जाना मित्र! उसकी एक लीक तो लग ही जायेगी।।१।।

वह गली सबकी जानी-पहचानी है। एक बार भी उसमें घुसे तो (समझो) नाक कटी।।२।।

**अचानक ही बचपन से आ गया बुढ़ौती में, जिस क्षण मेरी माँ ने आँखे मूँद ली।।३।।**

उस प्रकार की **पितृभक्ति** की प्रशंसा कैसे करूँ कि जिस (पिता) के सङ्केत से, बेटे द्वारा माँ का मस्तक काट दिया गया।।४।।

हे विधाता! तुम्हारी समझ को मैं सम्मत (उचित) कैसे मान लूँ जो तुमने मयूरों को सर्पभक्षी बना दिया।।५।।

वह चाहे बूढ़ा हो या जवान! रति-समर्थ हो अथवा असमर्थ! जिसकी प्रिया थी उमा, अपने वल्लभ पर पूर्णतः अर्पिता।।६।।

**भारत राष्ट्र में जब तक संस्कृत-भाषा सुरक्षित है (तब तक) विश्वबन्धुता का बीज निश्चय ही सुरक्षित है।।७।।**

कार में बैठा कुत्ता, कूड़े-कचरे में (खाना) खोज-बीन करते बच्चे को देख रहा है। आह! हत्या हो गई दीनता की।।८।।

सच मानो, कोई और बात अभिराज को (उतना) विपन्न नहीं बनाती, जितना कि श्रृगालों का, बहाना लेकर शेर जैसा आचरण करना।।९।।

•

## ते कृतज्ञोऽहम्

हतवानसिच्छलेन ते कृतज्ञोऽहम्।
जितवानसि भ्रमेण ते कृतज्ञोऽहम्।।१।।

लालाटिकोऽस्मि निर्निमेषस्ते।
भृतवानसि क्षुधैव ते कृतज्ञोऽहम्।।२।।

अद्य वा श्वो भवेद् ध्रुवं मरणम्।
तत्त्वयैवाहितं छुरेण ते कृतज्ञोऽहम्।।३।।

किन्नु कथ्येत ते ऽनुचर्याणाम्।
विषं निपायितं रसेन ते कृतज्ञोऽहम्।।४।।

पतङ्गकल्पजनं प्रापयन् खमुत्तुङ्गम्।
छिनस्सि तं नु दोरकेण ते कृतज्ञोऽहम्।।५।।

उपर्यहो नु लहर्योऽन्तरे दहद्वडवा।
सिन्धुतामेषि हृदा केन, ते कृतज्ञोऽहम्।।६।।

नो ऽविता नन्दिनी न चापि ते गतं शौर्यम्।
अलं महीप ते श्रमेण ते कृतज्ञोऽहम्।।७।।

आवयोर्भिन्नरुचिर्भिन्नगुणो भिन्नमतम्।
हन्त बन्धुत्वमक्रमेण, ते कृतज्ञोऽहम्।।८।।

नीलगगन होटल, जनकपुरी
प्रातर्नववादने, १६.१०.२०१२ ई०

•

छल से मारा मुझे, तुम्हारा कृतज्ञ हूँ। भ्रम पैदा करके विजयी बन गए, तुम्हारा कृतज्ञ हूँ मैं।।१।।

बिना पलक झपकाए (टकटकी बाँधे) तुम्हारा मुँह ताकता रहा हूँ (तथापि) मुझे भूखा ही रखा! तुम्हारा कृतज्ञ हूँ मैं।।२।।

आज या कल, मरना तो ध्रुव है। वह काम तुम्हीं ने कर दिया छुरे से। तुम्हारा कृतज्ञ हूँ मैं।।३।।

तुम्हारी अनुचर्याओं (व्यवहारों) की क्या प्रशंसा की जाय? (मीठे) रस के साथ ज़हर पिला दिया! कृतज्ञ हूँ तुम्हारा मैं।।४।।

पतङ्ग-सरीखे (अपने) गुणों को ऊँचे आसमान तक पहुँचा कर, उसे बीच डोरी से काट दिया? कृतज्ञ हूँ, तुम्हारा मैं।।५।।

वाह क्या कहना? ऊपर-ऊपर तो हैं लहरें और भीतर है दहकती वाडवाग्नि! किस कलेजे से समुद्र बने बैठे हो? कृतज्ञ हूँ तुम्हरा मैं।।६।।

**न नन्दिनी** गाय की रक्षा की, न ही अपना पराक्रम नष्ट किया (क्योंकि शेर को मारने के लिये उमगे तो?) हे राजन्! (दिलीप) हो चुका तुम्हारा श्रम! तुम्हारा कृतज्ञ हूँ मैं।।७।।

हम दोनों की रुचियाँ भिन्न हैं, गुण भिन्न हैं, मत भी भिन्न हैं। हन्त! फिर भी बिना सामञ्जस्य के ही, हममें भाईचारा है। कृतज्ञ हूँ तुम्हारा मैं।।८।।

•

## दामिनी दलिता

म्रियन्ते प्रावृषि प्रायो जनाः किल दामिनीपातात्।
विधे! किमिदं नु सञ्जातं खलैर्यद् दामिनी दलिता।।१।।

प्रसू रोदिति, पिता रोदिति, गृहे गृहिणी न किं रोदिति।
ध्रुवं तिष्ठन्ति बन्धो! मन्दिरेऽपि च देवता रुदिताः।।२।।

पृथिव्या यत्र मातृत्वं प्रतिष्ठितमार्षसंस्कृत्या।
अहो राष्ट्रे नु तस्मिन् भारते किं साम्प्रतं भविता।।३।।

कलिकया जायते पुष्पं, फलं पुष्पाच्च समुदीते।
क्व पुष्पं क्व च फलं यदि सैव कलिकाऽनवसरं गलिता।।४।।

न किं षट्सारमेयैर्निर्दयं निहता कुरङ्गी सा।
पितुर्मातुर्नयनयोः पुत्तली दयितस्य वा वनिता।।५।।

भगिन्या स्वीयया सार्धं तदेव नृशंसमाचरितुम्।
परानानुमंस्यते किं वा स जाल्मो योऽत्र घातयिता।।६।।

वरं पशवो न नग्नामपि सखीं ये जातु वरयन्ते।
अहो! प्रेमोपनिषदं जानते ते आत्मसंयमिताः।।७।।

स्वयं घनसारकल्पा दामिनी सा स्वर्गमारुढा।
मृता जीवन्ति जगतो दुष्कलङ्का राक्षसाः पतिताः।।८।।

महद्दुःखान्तनाट्यमहो नु जातं हायनं चैतत्।
हृता भूयोऽपि वैदेही द्रुपदजा कौरवैश्छलिता।।९।।

हृदिस्थं दानवं त्वरया बहिष्कुरु, जीवनेच्छा चेत्।
क्वचिन्नो स्यात्तवात्मीयाऽपि काचित्तेन पद्दलिता।।१०।।

नीलगगने रात्रि : ९.३५ वादने
३०.१२.२०१२ ई०

•

वर्षा के दिनों में प्रायः **दामिनी** (बिजली) के गिरने से लोग-बाग मरते हैं। परन्तु विधाता! यह क्या हो गया कि कमीनों ने 'दामिनी' को ही बरबाद कर दिया।।१।।

माँ रो रही है, बाप रो रहा है। घर में हर गृहिणी क्या नहीं रो रही है? मेरे भाई! निश्चित रूप से मन्दिर में देवता भी (इस घटना से) रो रहे हैं।।२।।

जिस भारत में आर्ष-संस्कृति के द्वारा **पृथ्वी का भी मातृत्व** प्रतिष्ठित किया गया **(माता भूमिः पुत्रो अहं पृथिव्याः-अथर्ववेद)** आश्चर्य है कि उस भारत राष्ट्र में अब क्या होने को है।।३।।

कली से पैदा होता है फूल और फूल से उत्पन्न होता है फल। परन्तु यदि वह **कली** ही अनवसर नष्ट कर दी गई तो कहाँ रहा (वह) फूल और फल? ।।४।।

क्या (उन) छह कुत्तो के द्वारा वह हिरनी नृशंसतापूर्वक मार नहीं डाली गई जो (अपने) माता-पिता की आँखों की पुतली थी, अथवा (भविष्य में प्राप्त होने वाले) पति की पत्नी थी।।५।।

जिस जालिम ने इइ घटना में यह महापाप किया, क्या वह अपनी बहन के साथ वही नृशंस व्यवहार करने के लिए, दूसरों को अनुमति देगा? ।।६।।

पशु भी (हमसे कहीं) अच्छे हैं जो (सर्वथा) नग्न रहती हुई भी अपनी सहचरी को, कभी भी (उसकी इच्छा न रहने पर) भोग नहीं करते। कितना आश्चर्य है कि आत्म-संयम में बँधे वे ही **प्रेम के उपनिषत् तत्त्व** को जानते हैं (क्षुद्र मनुष्य नहीं)।।७।।

कर्पूर-सरीखी वह **दामिनी** तो स्वयं स्वर्गलोक चली गई, परन्तु निन्द्य कलङ्क वाले वे संसार के पतित राक्षस, निष्प्राण होते हुए भी जी रहे हैं।।८।।

हा प्रभो! यह वर्ष तो (२०१२ ई०) अतिशय दुःखान्तनाटक ही सिद्ध हुआ। एक बार पुनः **वैदेही** अपहृत हुई और **द्रौपदी** कौरवों द्वारा छली गई।।९।।

यदि जीने की आकांक्षा है तो हृदय में बैठे दानवों को शीघ्रातिशीघ्र बाहर निकालो। तुम्हारी अपनी ही कोई (बेटी या बहन) उस दानव से पद-दलित न हो जाय।।१०।।

•

## किन्न मन्दुरायते?

हन्त देवमन्दिरं किन्न **मन्दुरायते**।
सुस्थिरं शिलाऽजिरं किन्न बन्धुरायते।।१।।

घोषयद्धि भारतं विश्वविश्वनीडताम्।
भूमिनन्दिनीहरः किन्न **रावणायते**।।२।।

सञ्चरन्ति निर्भया; कबन्धदूषणौ खराः।
हर्म्यवाटिकाऽप्यहो किन्न **दण्डकायते**।।३।।

क्षुद्रहृत्पुरन्दरैर्हा पतिव्रताच्च्युता।
काऽपि गौतमप्रिया साम्प्रतं **शिलायते**।।४।।

नैव लोकतो भयं नाऽपि शोकतो भयम्।
अद्य मानवाऽधमो दृप्त**दानवायते**।।५।।

बन्धने वृषाः खरा वन्दिताश्च धेनवः।
मुक्तकुक्कुरैर्गृहं किन्तु **पितृवनायते**।।६।।

वीतवत्सरस्य किं संस्मरान्यहं सुखम्?
केवला ऽपि दामिनी **भल्लकण्टकायते**।।७।।

चन्दनेषु वेष्टिता भीषणा भुजङ्गमाः।
क्षारधर्षिता मही **काममूषरायते**।।८।।

हन्त संस्कृतं विना सर्वमस्त्स्यसंस्कृतम्।
भारतन्नु दिविषदां रक्षसां **गृहायते**।।९।।

नीलगमने, ९ वादने
१.०१.२०१३ ई०

•

हाय रे! क्या देवमन्दिर घुड़साल नहीं लगने लगा है? सुस्थिर (चिकनी) शिलाओं से बना आँगन क्या ऊबड़-खाबड़ नहीं लगने लगा है? ।।१।।

अपने को सम्पूर्ण विश्व का नीड़ घोषित करता हुआ भारत क्या भूमिनन्दिनी (सीता) का अपहरण करने वाला **रावण** नहीं लगने लगा है।।२।।

कबन्ध, दूषर और खर (जैसे राक्षस) निर्भय घूमने लगे हैं। क्या अपने घर की बगीची भी **दण्डकवन** नहीं प्रतीत होने लगी है? ।।३।।

क्षुद्रहृदय वाले पुरन्दरों (इन्द्रों) द्वारा पातिव्रत से च्युत की गई कोई गौतमप्रिया (अहल्या) सम्प्रति शिला-सरीखी बन गई है।।४।।

नहीं रहा समाज से भय और नहीं रहा, **पश्चात्ताप** से भय! आज अधम मनुष्य दृप्तदानव प्रतीत होने लगा है।।५।।

बैल, गधे तथा वन्दनीय गायें–सब बन्धन में हैं। परन्तु बेलगाम घूमते कुत्तों के कारण घर भी श्मशान सा लगने लगा है।।६।।

गुजरे हुए साल का कौन-सा सुख याद करूँ? अकेली **दामिनी** का ही प्रकरण भाला एवं काँटा जैसा लगने लगा है।।७।।

चन्दन में लिपट गये हैं भीषण भुजङ्गम! क्षार से घर्षित धरती ही भरपूर ऊषर लगने लगी है।।८।।

ओफ् संस्कृत के अभाव में (इस राष्ट्र में) सब कुछ **अ-संस्कृत** ही है। देवताओं की (लीला) भूमि भारत राक्षसों का घर लगने लगी है।।९।।

•

## त्वमेवासि बन्धो!

यमन्विष्यतो जीवनम्मे व्यतीतम्।
स सर्वोत्तमस्त्वं, त्वमेवासि बन्धो।।१।।

त्रिधा कौलपत्येन योऽलङ्कृतोऽभूत्।
स विद्वत्तमस्त्वं, त्वमेवासि बन्धो।।२।।

न सत्यं मनोवाक्कृतैर्येन युक्तम्।
स सत्यव्रतस्त्वं, त्वमेवासि बन्धो।।३।।

निरस्तद्रुदेशे य एरण्डकल्पः।
वटस्सोऽक्षतस्त्वं, त्वमेवासि बन्धो।।४।।

अपूर्वां श्रियं रूपसाम्येन बिभ्रत्।
स हंसावृतस्त्वं, त्वमेवासि बन्धो।।५।।

स्वहस्तार्पितैः पुष्पमाल्यैः समञ्चन्।
स पद्माङ्कितस्त्वं, त्वमेवासि बन्धो।।६।।

समुद्घोषयन् जीवितां किंवदन्तीम्।
स अर्हत्तमस्त्वं, त्वमेवासि बन्धो।।७।।

स्वनिष्ठेष्वनार्यं चरन्नेव नित्यम्।
स आर्योत्तमस्त्वं, त्वमेवासि बन्धो।।८।।

युवस्पर्धितां दर्शयन् सप्रयत्नम्।
स मुग्धोत्तमस्त्वं, त्वमेवासि बन्धो।।९।।

स्फुरत्कङ्कणं व्याघ्रहस्तात्प्रगृह्णन्।
स लुब्धोत्तमस्त्वं, त्वमेवासि बन्धो।।१०।।

शिमला, शाम ४ बजे
१८.०१.२०१३ ई०

•

जिसको खोजते ही खोजते मेरा जीवन सिरा गया मेरे भाई! वह सर्वोत्तम व्यक्ति तुम हो, तुम्हीं हो।।१।।

जो तीन बार (टर्म) कुलपति-पद से अलंकृत हुआ, मेरे भाई! वह श्रेष्ठतम विद्वान् तुम्हीं हो।।२।।

मन, वाणी तथा कर्म-किसी भी रूप में **सत्य** जिसके साथ जुड़ा नहीं है, वह **सत्यव्रत** तुम्हीं हो मेरे भाई।।३।।

पेड़-पौधों से नहरूम इलाके में जो एरण्ड (रेड़) के समान (प्रतिष्ठित) है, मेरे भाई! वह **अक्षयवट** तुम्हीं हो।।४।।

रूप-साम्य से विलक्षण सुषमा को धारण करते हुए, हंसत्व से आवृत्त (राजहंस प्रतीत होने वाले) वह (बगुला भगत) तुम्हीं हो मेरे भाई।।५।।

अपने ही हाथों अर्पित किये गये पुष्पमाल्यों से शोभा प्राप्त करने वाले वह पद्माङ्कित (पद्मश्री, पद्मभूषण) तुम्हीं हो मेरे भाई।।६।।

अपने को **जीवित किं वदन्ती** (Living Legend) उद्घोषित करने वाले वह सर्वाधिक योग्य व्यक्ति (अहोपुरुष) तुम्हीं हो मेरे भाई।।७।।

अपने प्रति श्रद्धा-भक्ति रखने वालों के प्रति निरन्तर अभद्र आचरण करने वाले वह **आर्योत्तम** तुम्हीं हो मेरे भाई।।८।।

पूर्ण प्रयत्न के साथ युवाजनों के (भी) साथ अपनी प्रतिस्पर्धिता प्रदर्शित करते हुए वह **महामुग्ध** भी तुम्हीं हो मेरे भाई।।९।।

बाघ के हाथों से चमचमाते सुवर्ण-कङ्कण को ग्रहण करते वह महालोभी (ब्राह्मण) तुम्हीं हो मेरे भाई।।१०।।

•

## कीदृशाः कीदृशाः

मूर्च्छिता युद्धभूमिं विलोक्यैव ये।
सन्ति **लोके भटाः** कीदृशाः कीदृशाः।।१।।

अक्षमा हन्तुमेकं शशं वाऽप्यहो।
सन्ति **बिभ्रत्सटाः** कीदृशाः कीदृशाः।।२।।

ये न जानन्ति सीमां, महासिन्धव-
स्ते **विनश्यत्तटाः** कीदृशाः कीदृशाः।।३।।

रावहम्मीरकल्पा जयन्त्यद्य ते।
भूरि **शौर्यद्धठाः** कीदृशाः कीदृशाः।।४।।

नो विजानन्त्युदात्तादिकोच्चारणं।
ते नु **गायत्कठाः** कीदृशाः कीदृशाः।।५।।

नैव दीप्यद्ध्वनौ हन्त येषां रति-
**स्तेऽभिधामम्मटाः** कीदृशाः कीदृशाः।।६।।

प्रद्रुताः संविधायोपलैर्वर्षणम्।
अम्बुदा **दुर्घटाः** कीदृशाः कीदृशाः।।७।।

सूतवन्तो महर्षिं विनैव प्रसूम्।
ते नु **दिव्या घटाः** कीदृशाः कीदृशाः।।८।।

नामवन्तो बभूवुर्विशेषान्नु ये।
ते **बुधा उद्भटाः** कीदृशाः कीदृशाः।।९।।

शिमला, शाम ५.१९ बजे
१८.०२.२०१३ ई०

•

